नुपूर्व्यां नियमाद्बध्नाति" इति, ततो बन्धावलिकाया ऊर्ध्वं मनुजद्विकस्यापि संक्रमो भवतीति। लब्ध्या पर्याप्तके करणेन त्वपर्याप्तके संज्ञिनि तुर्यगुणस्थाने अष्टाविंशत्येकोनत्रिंशत्त्रिंशद्रूपं प्रतिग्रहस्थानत्रिकं स्यात्। तत्र अष्टाविंशत्यां द्व्युत्तरशतं पञ्चनवतिर्वा संक्रामति। एकोनत्रिंशति, त्रिंशति च त्र्युत्तरशतं पण्णवतिर्वा संक्रामति। असंज्ञिनि पर्याप्तके षट् प्रतिग्रहस्थानानि भवन्ति, तद्यथा—त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशच्चेति। तत्राष्टाविंशतिवर्जानि पञ्च पतद्ग्रहस्थानानि तिर्यङ्मनुष्यप्रायोग्यानि, अष्टाविंशतिपतद्ग्रहस्थानं देवगतिनरकगतिप्रायोग्यमिति। संक्रमस्थानानि चासंज्ञिनि पर्याप्तके पञ्च भवन्ति, तद्यथा—द्व्युत्तरशतं, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिश्चेति। तत्राष्टाविंशतिवर्जेषु पञ्चसु प्रतिग्रहेषु प्रत्येकेषु पञ्च पञ्च संक्रमस्थानानि शरीरपर्याप्तेरूर्ध्वमावलिकामात्रं यावत्, तत उपरि द्व्यशीतिवर्जानि चत्वारि स्थानानि संक्रामन्ति। अष्टाविंशतिपतद्ग्रहेऽपि द्व्यशीतिवर्जानि चत्वारि स्थानानि संक्रामन्ति। संज्ञिपर्याप्तके अष्टौ प्रतिग्रहस्थानानि भवन्ति, तद्यथा—त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, एका चेति। संक्रमस्थानानि द्वादश, तद्यथा—त्र्युत्तरशतं, द्व्युत्तरशतं, एकोत्तरशतं, पण्णवतिः, पञ्चनवतिः, चतुर्नवतिः, त्रिनवतिः, एकोननवतिः, अष्टाशीतिः, चतुरशीतिः, द्व्यशीतिः, एकाशीतिश्चेति। तत्र त्रयोविंशतिपञ्चविंशतिषड्विंशतिषु त्रीषु प्रतिग्रहेषु प्रत्येकं द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि पञ्च पञ्च संक्रमस्थानानि संक्रामन्ति। अष्टाविंशत्यां द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिरूपाणि चत्वारि संक्रमस्थानानि संक्रामन्ति। एकोनत्रिंशति, त्रिंशति च प्रतिग्रहे त्र्युत्तरशतद्व्युत्तरशतपण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि सप्त संक्रमस्थानानि संक्रामन्ति। एकत्रिंशति त्र्युत्तरशतद्व्युत्तरशतपण्णवतिपञ्चनवतिरूपाणि चत्वारि संक्रमस्थानानि संक्रामन्ति। एकस्मिन् पतद्ग्रहे द्व्युत्तरशतैकोत्तरशतपञ्चनवतिचतुर्नवत्येकोननवत्यष्टाशीतिद्व्यशीत्येकाशीतिरूपाण्यष्टौ संक्रमस्थानानि संक्रामन्तीति जीवस्थानेपूक्तः संक्रमप्रतिग्रहस्थानानां संवेधः। अत्रोक्तशेषं संक्रमप्रतिग्रहसत्ताबन्धप्रकृतिस्थानभङ्गादिकं सर्वं स्वयमेव परिभावनीयं, विस्तरभयाच्च नात्र लिख्यत इति समाप्तोऽयं प्रथमो विभागः॥

संक्रमश्च पतद्ग्रहः स्थानके गुणजीवयोः।
संवेधश्च तयोस्तत्र भागेऽवसेय आदिमे॥
सर्वाश्चर्यकरे प्रभावभवने श्रीदानसूरीशितुः,
साम्राज्ये विजयोत्तरेण मुनिना प्रेमाभिधान्तेपदा।
संदृब्धे वरसंक्रमाख्यकरणे कर्मस्वरूपातिथौ,
सप्ताष्टाङ्कशशाङ्कसंवति शुभे भागोऽजनिष्टादिमः॥

